॥ सर्वरोगनाशक श्रीसूर्यस्तवराजस्तोत्रम् ॥
विनियोगः - ॐ श्री सूर्यस्तवराजस्तोत्रस्य श्रीवसिष्ठ ऋषिः ।
अनुष्टुप् छन्दः । श्रीसूर्यो देवता ।
सर्वपापक्षयपूर्वकसर्वरोगोपशमनार्थे पाठे विनियोगः ।

ऋष्यादिन्यासः - श्रीवसिष्ठऋषये नमः शिरसि ।
अनुष्टुप्छन्दसे नमः मुखे । श्रीसूर्यदेवाय नमः हृदि ।
सर्वपापक्षयपूर्वकसर्वरोगापशमनार्थे पाठे विनियोगाय नमः अञ्जलौ ।

ध्यानं -
ॐ रथस्थं चिन्तयेद् भानुं द्विभुजं रक्तवाससे ।
दाडिमीपुष्पसङ्काशं पद्मादिभिः अलङ्कृतम् ॥

मानस पूजनं एवं स्तोत्रपाठः -
ॐ विकर्तनो विवस्वांश्च मार्तण्डो भास्करो रविः ।
लोकप्रकाशकः श्रीमान् लोकचक्षु ग्रहेश्वरः ॥

लोकसाक्षी त्रिलोकेशः कर्ता हर्ता तमिस्रहा ।
तपनः तापनः चैव शुचिः सप्ताश्ववाहनः ॥

गभस्तिहस्तो ब्रध्नश्च सर्वदेवनमस्कृतः ।
एकविंशतिः इत्येष स्तव इष्टः सदा मम ॥

॥ फलश्रुतिः ॥

श्रीः आरोग्यकरः चैव धनवृद्धियशस्करः ।
स्तवराज इति ख्यातः त्रिषु लोकेषु विश्रुतः ॥

यः एतेन महाबहो द्वे सन्ध्ये स्तिमितोदये ।
स्तौति मां प्रणतो भूत्वा सर्व पापैः प्रमुच्यते ॥

कायिकं वाचिकं चैव मानसं यच्च दुष्कृतम् ।
एकजप्येन तत् सर्वं प्रणश्यति ममाग्रतः ॥

एकजप्यश्च होमश्च सन्ध्योपासनमेव च ।
बलिमन्त्रोऽर्घ्यमन्त्रश्च धूपमन्त्रस्तथैव च ॥

अन्नप्रदाने स्नाने च प्रणिपाति प्रदक्षिणे ।

पूजितोऽयं महामन्त्रः सर्वव्याधिहरः शुभः ॥

एवं उक्तवा तु भगवानः भास्करो जगदीश्वरः ।
आमन्त्र्य कृष्णतनयं  तत्रैवान्तरधीयत ॥

साम्बोऽपि स्तवराजेन  स्तुत्वा सप्ताश्ववाहनः ।
पूतात्मा नीरुजः श्रीमान् तस्माद्रोगाद्विमुक्तवान् ॥

भगवान् सूर्यनामावली
१. विकर्तन २. विवस्वान् ३. मार्तण्ड ४. भास्कर ५. रवि
६. लोकप्रकाशक ७. श्रीमान् ८. लोकचक्षु ९. ग्रहेश्वर
१०. लोकसाक्षी ११. त्रिलोकेश १२. कर्ता १३. हर्ता १४. तमिस्रहा
१५. तपन १६. तापन १७. शुचि १८. सप्ताश्ववाहन
१९. गभस्तिहस्त २०. ब्रध्न ( ब्रह्मा ) २१. सर्वदेवनमस्कृत

इति ।